# Document Information

Text title : suvarNamaalaa stutiH
File name : suvarNamaalaa.itx
Category : varNamAlA
Location : doc_shiva
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Subramanian Ganesh sgesh at hotmail.com, NA
Proofread by : NA
Latest update : March 15, 2001, March 6, 2014
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ सुवर्णमालास्तुती ॥

## ॥ सुवर्णमालास्तुती ॥

अथ कथमपि मद्रसनां त्वद्गुणलेशैर्विशोधयामि विभो ।
साम्ब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ १
आखण्डलमदखण्डनपण्डित तण्डुप्रिय चण्डीश विभो । साम्ब० ॥ २
इभचर्माम्बर शम्बररिपुवपुरपहरणोज्ज्वलनयन विभो । साम्ब० ॥ ३
ईश गिरीश नरेश परेश महेश बिलेशय भूषण भो । साम्ब० ॥ ४
उमया दिव्यसुमङ्गलविग्रहयालिङ्गितवामाङ्ग विभो । साम्ब० ॥ ५
ऊरीकुरु मामज्ञमनाथं दूरीकुरु मे दुरितं भो । साम्ब० ॥ ६
ऋषिवरमानसहंस चराचरजननस्थितिलयकारण भो । साम्ब० ॥ ७
ॠक्षाधीशकिरीट महोक्षारूढ विधृतरुद्राक्ष विभो । साम्ब० ॥ ८
ऌवर्णद्वन्द्वमवृन्तसुकुसुममिवाङ्घ्रौ तवार्पयामि विभो । साम्ब० ॥ ९
एकं सदिति श्रुत्या त्वमेव सदसीत्युपास्महे मृड भो । साम्ब० ॥ १०
ऐक्यं निजभक्तयेभ्यो वितरसि विश्वम्भरोऽत्र साक्षी भो । साम्ब० ॥ ११
ओमिति तव निर्देष्ट्री मायाऽस्माकं मृडोपकर्त्री भो । साम्ब० ॥ १२
औदास्यं स्फुटयति विषयेषु दिगम्बरता च तवैव विभो । साम्ब० ॥ १३
अन्तःकरणविशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो । साम्ब० ॥ १४
अस्तोपाधिसमस्तव्यस्तै रूपैर्जगन्मयोऽसि विभो । साम्ब० ॥ १५
करुणावरुणालय मयि दास उदासस्तवोचितो न हि भो । साम्ब० ॥ १६
खलसहवासं विघटय सतामेव सङ्गमनिशं भो । साम्ब० ॥ १७
गरलं जगदुपकृतये गिलितं भवता समोऽस्ति कोऽत्र विभो । साम्ब० ॥ १८
घनसारगौरगात्र प्रचुरजटाजूटबद्धगङ्ग विभो । साम्ब० ॥ १९
ज्ञप्तिः सर्वशरीरेष्वखण्डिता या विभाति सात्वं भो । साम्ब० ॥ २०
चपलं मम हृदयकपिं विषयद्रुचरं दृढं बधान विभो । साम्ब० ॥ २१
छाया स्थाणोरपि तव पापं नमतां हरत्यहो शिव भो । साम्ब० ॥ २२
जय कैलासनिवास प्रमथगणाधीश भूसुरार्चित भो । साम्ब० ॥ २३
झणुतकझिङ्किणुझणुतत्किटतकशब्दैर्नटसि महानट भो । साम्ब० ॥ २४
ज्ञानं विक्षेपावृतिरहितं कुरु मे गुरूस्त्वमेव विभो । साम्ब० ॥ २५

टङ्कारस्तव धनुषो दलयति हृदयं द्विपामशनिरिव भो । साम्ब० ॥ २६
ठाकृतिरिव तव माया बहिरन्तः शून्यरूपिणी खलु भो । साम्ब० ॥ २७
डम्बरमम्बुरुहामपि दलयत्यनघं त्वदङ्घ्रियुगलं भो । साम्ब० ॥ २८
ढक्काक्षसूत्रशूलद्रुहिणकरोटीसमुल्लसत्कर भो । साम्ब० ॥ २९
णाकारगर्भिणी चेच्छुभदा ते शरणगतिर्नृणामिह भो । साम्ब० ॥ ३०
तव मन्वतिसञ्जपतः सद्यस्तरति नरो हि भवाब्धिं भो । साम्ब० ॥ ३१
थूत्कारस्तस्य मुखे भूयात्ते नाम नास्ति यस्य विभो । साम्ब० ॥ ३२
दयनीयश्च दयालुः कोऽस्ति मदन्यस्त्वदन्य इह वद भो । साम्ब० ॥ ३३
धर्मस्थापनदक्ष त्र्यक्ष गुरो दक्षयज्ञशिक्षक भो । साम्ब० ॥ ३४
ननुताडितोऽसि धनुषा लुब्धधिया त्वं पुरा नरेण विभो । साम्ब० ॥ ३५
परिमातुं तव मूर्तिं नालमजस्तत्परात्परोऽसि विभो । साम्ब० ॥ ३६
फलमिह नृतया जनुषस्त्वत्पदसेवा सनातनेश विभो । साम्ब० ॥ ३७
बलमारोग्यं चायुस्त्वद्गुणरुचितां चिरं प्रदेहि विभो । साम्ब० ॥ ३८
भगवन् भर्ग भयापह भूतपते भूतिभूषिताङ्ग विभो । साम्ब० ॥ ३९
महिमा तव नहि माति श्रुतिषु हिमानीधरात्मजाधव भो । साम्ब० ॥ ४०
यमनियमादिभिरङ्गैर्यमिनो हृदये भजन्ति स त्वं भो । साम्ब० ॥ ४१
रज्जावहिरिव शुक्तौ रजतमिव त्वयि जगन्ति भान्ति विभो । साम्ब० ॥ ४२
लब्ध्वा भवत्प्रसादाच्चक्रं विधुरवति लोकमखिलं भो । साम्ब० ॥ ४३
वसुधातद्धरच्छयरथमौर्वीशरपराकृतासुर भो । साम्ब० ॥ ४४
शर्व देव सर्वोत्तम सर्वद दुर्वृत्तगर्वहरण विभो । साम्ब० ॥ ४५
षड्रिपुषडूर्मिषड्विकारहर सन्मुख षण्मुखजनक विभो । साम्ब० ॥ ४६
सत्यं ज्ञानमनन्तं ब्रह्मेत्येतल्लक्षणलक्षित भो । साम्ब० ॥ ४७
हाहाहूहूमुखसुरगायकगीतापदानवद्य विभो । साम्ब० ॥ ४८
ळादिर्न हि प्रयोगस्तदन्तमिह मङ्गलं सदाऽस्तु विभो । साम्ब० ॥ ४९
क्षणमिव दिवसान्नेष्यति त्वत्पदसेवाक्षणोत्सुकः शिव भो ।
साम्ब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ५०
॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ सुवर्णमालास्तुतिः सम्पूर्णा ॥

Encoded partial by Subramanian Ganesh sgesh@hotmail.com, extended NA
Proofread by NA

